# श्रीहनुमत्कवचम्

॥ श्रीमदानन्दरामायणान्तर्गत श्री हनुमत् कवचं ॥

॥ ॐ श्री हनुमते नमः ॥

ॐ अस्य श्री हनुमत्कवच स्तोत्र महामन्त्रस्य,

श्री रामचन्द्र ऋषिः ।

श्री हनुमान् परमात्मा देवता ।

अनुष्टुप् छन्दः ।

मारुतात्मजेति बीजं ।

अञ्जनीसूनुरिति शक्तिः ।

लक्ष्मणप्राणदातेति कीलकं ।

रामदूतायेत्यस्त्रं ।

हनुमान् देवता इति कवचं ।

पिङ्गाक्षोमित विक्रम इति मन्त्रः ।

श्रीरामचन्द्र प्रेरणया रामचन्द्र प्रीत्यर्थं

मम सकल कामना सिद्ध्यर्थं जपे विनियोगः ॥

करन्यासः ॥

ॐ ह्रां अञ्जनीसुताय अङ्गुष्ठाभ्यां नमः ।

ॐ ह्रीं रुद्र मूर्तये तर्जनीभ्यां नमः ।

ॐ ह्रूं रामदूताय मध्यमाभ्यां नमः ।

ॐ ह्रैं वायुपुत्राय अनामिकाभ्यां नमः ।

ॐ ह्रौं अग्निगर्भाय कनिष्ठिकाभ्यां नमः ।

ॐ ह्रः ब्रह्मास्त्र निवारणाय करतल करपृष्ठाभ्यां नमः ॥

अङ्गन्यासः ॥

ॐ ह्रां अञ्जनीसुताय हृदयाय नमः ।

ॐ ह्रीं रुद्र मूर्तये शिरसे स्वाहा ।

ॐ ह्रूं रामदूताय शिखायै वषट् ।

ॐ ह्रैं वायुपुत्राय कवचाय हुं ।

ॐ ह्रौं अग्निगर्भाय नत्रत्रयाय वौषट् ।

ॐ ह्रः ब्रह्मास्त्र निवारणाय अस्त्राय फट् ।

भूर्भुवःसुवरोमिति दिग्बन्धः ॥

अथ ध्यानम् ॥

ध्यायेत्बालदिवाकरद्युतिनिभं देवारिदर्पापहं
देवेन्द्र प्रमुखं प्रशस्तयशसं देदीप्यमानं रुचा ।
सुग्रीवादि समस्तवानरयुतं सुव्यक्त तत्त्वप्रियं
संसक्तारुण लोचनं पवनजं पीताम्बरालङ्कृतं ॥ १॥

उद्यन् मार्ताण्डकोटि प्रकट रुचियुतं चारुवीरासनस्थं
मौञ्जी यज्ञोपवीताभरण रुचिशिखं शोभितं कुण्डलाङ्गं ।
भक्तानामिष्टदं तं प्रणतमुनिजनं वेदनाद प्रमोदं
ध्यायेदेवं विधेयं प्लवग कुलपतिं गोष्पदीभूत वार्धिं ॥ २॥

वज्राङ्गं पिङ्गकेशाढ्यं स्वर्णकुण्डल मण्डितं
निगूढमुपसङ्गम्य पारावार पराक्रमं ॥ ३॥

स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिं ।
कुण्डल द्वय संशोभिमुखांभोजं हरिं भजे ॥ ४॥

सव्यहस्ते गदायुक्तं वामहस्ते कमण्डलुं ।

उद्यद् दक्षिण दोर्दण्डं हनुमन्तं विचिन्तयेत् ॥ ५॥

अथ मन्त्रः ॥

ॐ नमो हनुमते शोभिताननाय यशोलङ्कृताय

अञ्जनीगर्भ संभूताय ।

राम लक्ष्मणानन्दकाय ।

कपिसैन्य प्रकाशन पर्वतोत्पाटनाय ।

सुग्रीवसाह्यकरण परोच्चाटन ।

कुमार ब्रह्मचर्य ।

गंभीर शब्दोदय ।

ॐ ह्रीं सर्वदुष्टग्रह निवारणाय स्वाहा ।

ॐ नमो हनुमते एहि एहि ।

सर्वग्रह भूतानां शाकिनी डाकिनीनां

विशमदुष्टानां सर्वेषामाकर्षयाकर्षय ।

मर्दय मर्दय ।

छेदय छेदय ।

मर्त्यान् मारय मारय ।

शोषय शोषय ।

प्रज्वल प्रज्वल ।

भूत मण्डल पिशाचमण्डल निरसनाय ।

भूतज्वर प्रेतज्वर चातुर्थिकज्वर

ब्रह्मराक्षस पिशाचः छेदनः क्रिया विष्णुज्वर ।

महेशज्वरं छिन्धि छिन्धि ।

भिन्धि भिन्धि ।

अक्षिशूले शिरोभ्यन्तरे ह्यक्षिशूले गुल्मशूले

पित्तशूले ब्रह्म राक्षसकुल प्रबल

नागकुलविष निर्विषझटितिझटिति ।

ॐ ह्रीं फट् घेकेस्वाहा ।

ॐ नमो हनुमते पवनपुत्र वैश्वानरमुख

पापदृष्टि शोदा दृष्टि हनुमते घो अज्ञापुरे स्वाहा ।

स्वगृहे द्वारे पट्टके तिष्ठतिष्ठेति तत्र

रोगभयं राजकुलभयं नास्ति ।

तस्योच्चारण मात्रेण सर्वे ज्वरा नश्यन्ति ।

ॐ ह्रां ह्रीं ह्रूं फट् घेघेस्वाहा ।

श्री रामचन्द्र उवाच-

हनुमान् पूर्वतः पातु दक्षिणे पवनात्मजः ।

अधस्तु विष्णु भक्तस्तु पातु मध्यं च पावनिः ॥ १॥

लङ्का विदाहकः पातु सर्वापद्भ्यो निरन्तरं ।

सुग्रीव सचिव: पातु मस्तकं वायुनन्दनः ॥ २॥

भालं पातु महावीरो भृवोर्मध्ये निरन्तरं ।

नेत्रे छायापहारी च पातु नः प्लवगेश्वरः ॥ ३॥

कपोले कर्णमूले च पातु श्रीरामकिङ्करः ।

नासाग्रं अञ्जनीसूनुः पातु वक्त्रं हरीश्वरः ॥ ४॥

वाचं रुद्रप्रियः पातु जिह्वां पिङ्गल लोचनः ।

पातु देवः फाल्गुनेष्टः चिबुकं दैत्यदर्पहा ॥ ५॥

पातु कण्ठं च दैत्यारिः स्कन्धौ पातु सुरार्चितः ।
भुजौ पातु महातेजाः करौ च चरणायुधः ॥ ६॥

नगरन् नखायुधः पातु कुक्षौ पातु कपीश्वरः ।
वक्षो मुद्रापहारी च पातु पार्श्वे भुजायुधः ॥ ७॥

लङ्का निभञ्जनः पातु पृष्ठदेशे निरन्तरं ।
नाभिं च रामदूतस्तु कटिं पात्वनिलात्मजः ॥ ८॥

गुह्यं पातु महाप्राज्ञो लिङ्गं पातु शिवप्रियः ।
ऊरू च जानुनी पातु लङ्काप्रसाद भञ्जनः ॥ ९॥

जङ्घे पातु कपिश्रेष्ठोः गुल्फौ पातु महाबलः ।
अचलोद्धारकः पातु पादौ भास्कर सन्निभः ॥ १०॥

अङ्गान्यमित सत्वाढ्यः पातु पादरङ्गुलीस्तथा ।
सर्वाङ्गानि महाशूरः पातु रोमाणि चात्मवित् ॥ ११॥

हनुमत् कवचं यस्तु पठेद् विद्वान् विचक्षणः ।
स एव पुरुषश्रेष्ठो भुक्तिं मुक्तिं च विन्दति ॥ १२॥

त्रिकालमेककालं वा पठेन् मासत्रयं नरः ।
सर्वान् रिपून् क्षणान् जित्वा स पुमान् श्रियमाप्नुयात् ॥ १३॥

इति श्री शतकोटिरामचरितांतर्गत

श्रीमदानन्दरामायणे वाल्मिकीये मनोहरकाण्डे

श्री हनुमत्कवचं सम्पूर्णं ॥